श्रीगणेशायनमः

# श्री कार्तविर्य स्तोत्रम्

तत्राऽऽदौ श्रीकार्तविर्यार्जुनकवचम्

उक्तं च डामरेश्वरतन्त्रे

ॐ अस्य राजराजेश्वर- श्रीकार्तविर्यार्जुनकवचमाला-मन्त्रस्य भगवन् दत्तात्रेयऋषिः अनुष्टुप्छन्दः श्रीकार्त-विर्यार्जुनविष्णुचक्रवर्तिदेवता क्रों बीजं क्लीं कीलकं-स्वाहाशक्तिःममाऽभिष्टफलसिध्यर्थेजपे विनियोगः ॥१॥

अथ करषडङ्गन्यासः

ॐ दत्तात्रेयप्रियतमाय कार्तवीर्यार्जुनाय अङ्गुष्ठाभ्यां नमः । ॐ माहिष्मती नाथाय तर्जनीभ्यां स्वाहा । रेवाकृडाष्स्तुताय मध्यमाभ्यां वौषट् । ॐ हैहया-धिपतये अनामिकाभ्यां हुम् । ॐ वीरभद्राय कनिष्ठिकाभ्यां वौषट् । ॐ सहस्रवाहवे करतलकरपृष्ठाभ्यां फट् ।

एवं हृदयादि न्यासः ॥२॥ अथापरोन्यासः ।

ॐ क्रौं फ्रौं अङ्गुष्ठाभ्यां नमः । ॐ च्रीं छ्रीं तर्जनिभ्यां नमः । ॐ भ्रुं आं मध्यमाभ्यां नमः । ॐ श्रौं क्रौं अनामीकाभ्यां नमः । ॐ श्रीं हुँफट् कनिष्ठीकाभ्यां नमः । ॐ कार्तविर्यार्जुनाय करतलकरपृष्ठाभ्यां नमः

एवं हृदयादिन्यसः । बीं बीजन्यासः ।



ॐ ह्रौं ह्रिदयाय नमः । ॐ क्लीं शिरसे स्वाहा । ॐ भ्रुं आँ शिखायै वौषट् । ॐ क्रां कवचाय हुं । ॐ हुं फट् नेत्रत्रयाय वौषट् । ॐ कार्तवीर्यार्जुनाय नमः अस्त्रायफट् । एभिरेव वीजैः करन्यासं कुर्यात् ॥३॥

ततोऽक्षरन्यासः

ॐ ह्रिदयाय नमः । ॐ क्रों क्लौं ह्रि दये । ॐ घ्री क्रिं नाभौ । ॐ क्लीं जठरे । ॐ भ्रूं गुह्ये । ॐ ह्री उर्वो । ॐ ऐं मुर्ध्नि । ॐ हुं भ्रुयुगे । ॐ फट् ह्रिदये । ॐ काँ दक्षिणकर्णे । ॐ तँ वामकर्णे । ॐ वीँ दक्षिण नेत्रे । ॐ याँ वामनेत्रे । ॐ जुँ नासिकायाम् । ॐ नाँ वक्त्रे । ॐ यँ कण्ठे । ॐ नँ दक्षिणवाहौ ।

इत्यक्षर न्यास ॥४॥

अथ प्रकारान्तरेणाऽक्षरन्यासः ।

ॐ फ्रों ह्रिदये । ॐ छ्रिं नाभौ । ॐ क्लीं जठरे । ॐ भ्रु गुह्ये । ॐ आँ उर्वो । ॐ ह्रीं जान्वो । ॐ क्रों पादयो । ॐ श्रीं मूर्ध्नि । ॐ ऐं भ्रूयुगे । ॐ हुँ फट् ह्रिदये । ॐ काँ दक्षिणकर्णे । ॐ तँ वामकर्णे । ॐ वीँ दक्षिण नेत्रे । ॐ याँ वामनेत्रे । ॐ जुँ नासिके । ॐ नाँ वक्त्रे । ॐ यँ कण्ठे । ॐ नँ दक्षिणवाहौ । ॐ वामवाहौ । इत्यक्षरन्यासः ॥५॥

अथ ध्यानम्

अव्यात्सर्वभयात्- प्रभाकरनिभः- प्रद्योतनद्योतनः ,
स्वर्णस्रक्परिवितकन्धरधरो रक्तां शुकुष्णिषवान् ।
नानाकल्पविभुषितःकरसह स्त्रार्धात्तवाणासनो ,
वाणात्तार्धसहस्रबाहुरनिसः भूवल्लभोनप्रभुः ॥१॥
सहस्रवाहुंस सरं सचापं
रक्तांवरंरक्तकिरिट कुण्डलम् ।
चेहादि दुष्ट भयनासन मिष्टदंतं
ध्यायेन्महावल बीजृम्भितकार्तविर्यम् ॥२॥
द्योर्दण्डेषुसहस्रसम्मितवरे ष्वेतेष्वजस्रं लसत् ,
कोदण्डेषुशरैरुदग्रविशिखै- रुद्यद्वि वस्वत्प्रभुः ।
ब्रह्माण्डं परिपुरयंस्तदखिलं गण्डस्थलालोलित ,
प्रोद्यत्कुण्डलमण्डितोविजयते श्रीकार्तविर्यार्जुन ॥३॥
सप्तद्विपैकनाथः सवितृसमरुचिः सर्वदुष्टान्तकोनः ,
पायादब्जायताक्षोरथवरनिलयः- स्थुलकायोतिभिमः ।
द्वीपान्तेषुस्त्रिलोकिंधृतसरधुषां- निस्वनैस्त्रायमाण ,
श्रीमाञ्छ्रीकार्तविर्यःसकलनृपधृतां- घ्रम्भुजक्षिप्रकारी
॥४॥ ततो मन्त्रंजपेत् ॐ फ्रौं छ्रीं क्लीं भ्रुँ आँ
ह्रीं क्रौं श्रीं ऐं फट् स्वाहा ॐ कार्तवीर्यार्जुनाय नमः
ततः साधारण ध्यानमन्त्र
दक्षेपञ्चशतंबाणान् वामेपञ्चशतंधनु ।
कार्तवीर्यार्जुनोनाम राजारक्षतुमांसदा ॥५॥ ॐ



नमोभगवते कार्तविर्यार्जुनाय सहस्रवाहवे अमित-
विक्रमाय सर्वदुष्टचौरदमनाय चतुष्पथा दागतां
श्चोरसमूहानाकर्षयाऽऽकया । ॐ ह्रां ह्रीं ह्रुं कार्तवि-
र्याजुनाय हुं फट् स्वाहा
ॐ ह्रां ह्रीं ह्रुं कार्तविर्याजुनाय हुं फट् स्वाहा ॥७॥
ततो गायत्रीं जपेत् ॥
ॐ कार्तवीर्यार्जुनायविद्महे सहस्रकरायधिमहि ।
तन्नोविष्णुःप्रचोदयात् ॥
ॐ अस्त्रोपसंहरणमन्त्रस्य भार्गवऋषिः सविता
देवतागायत्रीछन्दःअस्त्रोपसंहरणे जपे विनियोगः
सोऽहमर्करहं ज्योतिरर्कज्योतिरहं शिवः ।
आत्मज्योतिरहंशुक्लः- शुक्लज्योतिरसोऽहमोम् ॥१॥
श्रीदेव्युवाचः
देवाधिदेवसर्वज्ञ सर्वलोकहितेरत ।
केनरक्षा भवेन्नृणांभीतानां विविधापदि ॥२॥
राजचौरादि पिडासु शस्त्राऽग्नि विषपातने ।
मारिदुःस्वप्नपिडाषु सिंहव्याघ्रनिपातने ॥३॥
ज्वराऽपस्मारपीडासु ग्रहरोग भयेषुच ।
राक्षसाऽसुरवेताल पिशाच प्रेतपातने ॥४॥
महाभये महावित्त-नाशेनावि गुहार्णवे ।
महामृत्यु भयेघोरेमहाकलह पातने ॥५॥

केनोपायेनशान्तिःस्यात् साधकानांमहेश्वर ।
अनष्टद्रव्यताचैव नष्टस्यपुनरागमः ॥६॥
सर्वाकर्षणसंक्षोभं सर्वस्वहरणं तथा ।
भवत्यभिष्टं जप्तॄणां केनतद्वद मे शिव ॥७॥

शिव उवाच

श्रृणुगुह्यतमं देवि गोपनियं प्रयत्नतः ।
अवाच्यमपि वक्ष्यामि तवलोकहिताय वै ॥८॥
कवचं कार्तवीर्यस्य साङ्गावरणकं क्रमात् ।
समर्त्तिशक्तिमत्रौघं स जपध्यानपूर्वकम् ॥९॥
सहस्रादित्यसङ्काशे नानारत्नसमुज्वल ।
भास्वद् ध्वज पताकाढ्ये तुरङ्गायुत भूषिते ॥१०॥
महासंवर्तकांभो द-भीमारावविराविणि ।
समुद्धृतमहाछत्र वितानित वियत्पथे ॥११॥
महाँरथवरदिप्ते नानायुधविराजिते ।
सुस्थिरंविपुलोदार सहस्रभुजमण्डितम् ॥१२॥
वमैरुद्दण्डकोदण्डान् दधारैमपरैसरान् ।
किरिटहार मुकुट केयुरबलयाङ्गदै ॥१३॥
मुद्रीको दारबन्धाद्यै मौञ्जी नूपुरकादिभि ।
भूषितंविविधाकल्पै र्भास्वरैसुमहाधनैः ॥१४॥
आबद्धकवचंवीरं सुप्रसन्नाननाम्वुजम् ।
धनुर्ज्यासिंहनादेन कम्पयन्तं जगत्त्रयम् ॥१५॥



सर्वशत्रुक्षयकरं सर्वव्याधि विनासनम् ।
सर्वसंपत्प्रदातारं विजयश्रीनिषेवितम् ॥१६॥
सर्वसौभाग्यदं भद्रं भक्तानांभयनासनम् ।
दिव्यमाल्यानुलेपाढ्यम् सर्वलक्षणसंयुतम् ॥१७॥
रथ नागाश्वपादाति वृन्दमध्यगमिश्वरम् ।
वरदंचक्रवर्तिना माद्यंलोकैकपालकम् ॥१८॥
समानोदितसाहस्र दिवाकरसमद्युतिम् ।
महायोगबलैश्वर्य कीर्त्याऽऽक्रान्तजगत्त्रयम् ॥१९॥
श्रीमच्चक्रहरेरंसा दवतीर्णमहावलम् ।
सम्यगात्मबिमेदेन ध्यात्वारक्षामुदिरयेत् ॥२०॥
दत्तात्रेयऋषी प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्तितम् ।
कार्तविर्यार्जुनो विष्णु स्चक्रवर्त्ती च देवता ॥२१॥
विनियोगोऽस्य रक्षायै सर्वत परिकीर्तिता ।
सर्वदुष्टविनाशाय सर्वार्थस्यापिसिद्धये ॥२२॥

यस्य यत्कार्यं शुभाऽशुभं भवति तस्य तन्नाम गृहीत्वा कुशाऽक्षतरक्तचन्दनसहितंजलं भुमौ क्षीपेत् तदनन्तरं पाठः

षडङ्गध्यानम्

अस्याऽङ्गमूर्तयःपञ्च पान्तु मांस्फटिकोज्ज्वल ।
अग्नीशासुरवायव्य कोणेसु हृदयादिकाः ॥२३॥
सर्वतोऽस्रन्ज्वलद्रुपा वरचर्माऽसिपाणय ।
अव्याहतवलैश्वर्य शक्तिःसामर्थ्यविग्रहाः ॥२४॥

(क्षेमङ्करीशक्तियुत-श्चौराणां मदभञ्जनः ।
प्राचिंदिसंरक्षतुमे वाणवाणासनायुधः ॥२५॥
शीकरिशक्तिसहितो मारिमदविभञ्जनः ।
शरचापधरःशीमान् दिसंमेपातुदक्षिणाम् ॥२६॥
महावस्य करीयुक्तः शत्रुणां मदभञ्जनः ।
महेश चापधृक्पातु ममप्रचेतसीं दिशम् ॥२७॥
इशस्कर्यासमायुक्तो दैत्यानांमदभञ्जनः ।
कोदण्डेषुः धरःसौम्यां दिशंमेपरीरक्षतु ॥२८॥
प्रज्ञाकरी युतस्चाप बाणवान्दुस्टनासनः ।
परिरक्षतुमे सम्यग् विदिशंचैत्रमानवीम् ॥२९॥
विद्याकरीसमायुक्तः सुमहान् दुःखनासन ।
पातुमे नैर्ऋतींचाप बाणीविदिशमीस्वरः ॥३०॥
धनङ्कर्यासमायुक्तो महादुरितनाशनः ।
इष्वासनेषुधृक्पातु विदिशंममवायविम् ॥३१॥
आयुःकर्यासमायुक्तः- श्रीमान्भयविनाशन ।
चापेषुधारीशैवींमे- विदिशंपरिरक्षतु ॥३२॥
विजयश्रीयुतः साक्षात् सहस्रारधरोविभुः ।
दिशमूर्द्ध्वामवतुमे महाभय विनाशन ॥३३॥
शङ्खभृत् सुमहाशक्ति संयुतोऽप्यधरांदिसं ।
परिरक्षतुमे दुःख ध्वान्तसंभेद भाष्करः ॥३४॥
महायोगश्रियायुक्तः सर्वदिक्चक्रमण्डलम् ।



महायोगेश्वरःपातु सर्वतो ममपद्मभृत् ॥३५॥
एतादिङ्गुतयो रक्ता रक्तामाल्यांशुकावृताः ।
प्रधान देवतारुपाःपृथग्रथवरेस्थिता ॥३६॥
सक्तयः पद्महस्तश्च निलेन्दिवरलोचना ।
सुशुक्लमाल्यवसना ललितास्तिलकोज्ज्वलाः ॥३७॥
तत्पार्श्वदेवता स्वस्व वाहनायुधभुषणा ।
स्वस्वदिक्षुस्थिताःपान्तु मामीन्द्राद्यामहावला ॥३८॥
एतातस्यसमाख्याताः सर्वावरणदेवताः ।
सर्वतोमाम्सदापान्तु सर्वशक्तिःसमन्विताः ॥३९॥
ह्रिदयेचोदरेनाभौ जठरेगुह्य मण्डले ।
ऊरुयुग्जानुपादेसु मुर्ध्नि च भ्रुयुगेषु च ॥४०॥
कर्णाऽक्षिनासिकावक्त्र कण्ठ वाहुयुगेषुच ॥
दसविजा क्षरामन्त्रा यशः समृद्धिदायकाः ॥४१॥
तेजोरुपाःस्थिताःपान्तु वाञ्छासुरवरद्रुमा ।
दशचाऽन्येमहावर्णा मन्त्ररुपामहोज्ज्वलाः ॥४२॥)
व्यापकत्वेनपान्त्वष्मा नापादतलमस्तकम् ।
आदौसम्वोधनं कृत्वा तन्नामस्थानपूर्वकम् ॥४३॥
दत्त्वान्तेचोक्तमन्त्राणां मुच्चरेद्वीजपूर्वकम् ।
शरीरेन्यासमेवम्हि यः करोति समाहितः ॥४४॥
सर्वकार्ये सुसंपन्न भगवन्भक्तीवान्नरः ।
यथोक्तं लभते सद्यः फलंवज्र तनुर्भवेत् ॥४५॥ ॐ

नमो भगवते भोभोः कार्तविर्यार्जुन ॐ फ्रों ॐ मम ह्रिदयेदुष्टं दारय दारय दुरितं हनहनपापं मथमथआरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१॥

ॐ नमो भगवते भोभोः कार्तवीर्याजुन ॐ छ्रीं ॐ मम उदरे दुष्टं दारयदारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥२॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ क्लिं ॐ मम नाभौ दुष्टं दारयदारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥३॥

ॐ नमो भोभोः कार्तवीर्यार्जुन ॐ भ्रु ॐ मम जठरे दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥४॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ आँ मम गुह्ये दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥५॥



ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ ह्रीं मम ॐ उर्वोः दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥६॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ क्रो मम जान्वो दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥७॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ श्रीं ॐ मम पदयोः दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥८॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ हुँ मम मूर्ध्नि दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥९॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ फट् ममभ्रुवोर्दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१०॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ फ्रों मम दक्षिण कर्णे दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥११॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ श्रीँ ॐ मम वामकर्णे दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१२॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ क्लिं ममदक्षिणनेत्रे दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१३॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ भ्रु ॐ मम वामनेत्रे दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१४॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ आँ ॐ मम दक्षिणनासपुटे दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१५॥



ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ ह्रीं ॐ मम वामनासपुटेः दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१६॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ क्रों ॐ मम वक्त्रे दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१७॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ श्रीं ॐ मम कण्ठे दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१८॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ हुँ ॐ ममदक्षिणहस्ते दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥१९॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ फट् ॐ मम वामहस्ते दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥२०॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ हुँ ॐ मम वात्वोः दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥२१॥

ॐ फ्रौं छ्रीं क्लीं भ्रुं आँ ह्रीं क्रों स्रीं हुँ फट् ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ काँ ॐ सहस्रार मम सर्वाङ्गेषु दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥२२॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ तँ ॐसस्त्रार मम सर्वाङ्गेषु दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥२३॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ वीं ॐ सहस्त्रार मम सर्वाङ्गेषु दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष ममसर्वार्थं साधयसाधय ॥२४॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ र्यां ॐ सहस्त्रार मम सर्वाङ्गेषु दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥२५॥



ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ जुँ ॐ सहस्त्रार मम सर्वाङ्गेषु दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥२६॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ नाँ ॐ सहस्त्रार मम सर्वाङ्गेषु दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधयसाधय ॥२७॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ यँ ॐ सहस्त्रार मम सर्वाङ्गेषु दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधय साधय ॥२८॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ नँ ॐ सहस्त्रार मम सर्वाङ्गेषु दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विष द्विष मम सर्वार्थं साधय साधय ॥२९॥

ॐ नमो भगवते भोभोः कार्तवीर्यार्जुन ॐ मँ ॐ सहस्त्रार मम सर्वाङ्गेषु दुष्टं दारय दारय दुरितं हनहन पापं मथमथ आरोग्यं कुरुकुरु हँ हाँ हुँ हूँ फट् हनहन द्विषद्विष मम सर्वार्थं साधय साधय ॥३०॥

ॐ फ्रौं छ्रीं क्लिं भ्रुं आँ ह्रीं क्रों स्रीं हुँ फट् कार्त वीर्यार्जुनाय नमः ॐ कार्त वीर्यार्जुनाय विद्महे सहस्त्र कराय धीमहि तन्नोविष्णुः प्रचोदयात् ॥३१॥
ॐ कार्तवीर्यः शिरः पातु ललाटं हैहयेश्वर ।
सुमुखोमे मुखंपातु कर्णौ व्याप्तजगत्त्रयः ॥४६॥
सुकुमारो हनुं पातु भ्रूयुगं मे जनार्दनः ।
नयनेपुण्डरीकाक्षो नासिकां मे गुणाकरः ॥४७॥
अधरोष्टौसदापातु ब्रह्मगेयो द्विजान् कविः ।
सर्वशास्त्रकलाधारो जिह्वां चिवुकमब्ययः ॥४८॥
दत्तात्रेय प्रिय कण्ठं स्कन्धौ राजकुलेस्वरः ।
भुजौ दशास्यदर्पघ्नो ह्रिदयंमे महावलः ॥४९॥
कुक्षीरक्षतु मेविद्वान वक्षः परपुरञ्जयः ।
करौ सर्वार्थदः पातु कराग्रेतु जगत्प्रियः ॥५०॥
रेवाम्वु लिलासन्त्रिप्तो जठरं मेऽभिरक्षतु ।
वीरभूः पातुमे नाभीं पार्श्वौ मे सर्वदुष्टहा ॥५१॥
सहस्रभुजभृत्पृष्टं सप्तद्विपाधीपः कटिम् ।
उरुमाहिष्मतिनाथो जानुनिवल्लभो भुवः ॥५२॥
जङ्घे वीराधिपःपातु पातुपादौमनोजवः ।
पातुसर्वायुधधरः सर्वाङ्गं सन्धिमर्मसु ॥५३॥
सर्वदुष्टांतकः पातु धात्वष्ठककलेवरम् ।
प्राणादिदशजिवेशां सर्वशिष्टेष्टदोऽवतु ॥५४॥


वशीकृतेन्द्रियः ग्रामः पातुसर्वेन्द्रियाणि मे ।
अनुरक्तमपियेत् स्थानंशरिरेऽन्तर्वहिश्चयेत् ॥५५॥
तत् सर्वं पातुमेसर्व लोकनाथे श्वरेश्वर ।
वज्रात्सारतरं चेदं शरिरं कवचावृतं ॥५६॥
वाधाशतविनिर्मुक्त मस्तुमे भयवर्जितम् ।
बद्ध्वेदं कवचं दिव्य मभेद्यं हैहयेशितुः ॥५७॥
विचरामि दिवारात्रौ निर्भयेनान्तरात्मनाः ।
राजमार्गे महादुर्गे दुष्टचौरादिसङ्कुलेत् ॥५८॥
विषमेविपिने घोरे दावाग्नौ गिरिकन्दरे ।
संग्रामे शस्त्रसंम्पाते सिंहव्याघ्रनिषेविते ॥५९॥
गह्वरेसर्पसङ्कीर्णे सन्ध्याकाले नृपालये ।
विवादेविपुलावर्ते समुन्द्रेच नदीतटे ॥६०॥
परिपन्थिशताकोर्णे देशेदश्युगणावृते ।
सर्वश्वहरणे प्राप्ते प्राप्तेप्राणस्यसंशये ॥६१॥
नानारोग ज्वरावेशे पिशाच प्रेतपातने ।
मारिदुःष्वप्नपिडाषु कृष्टेविश्वास घातके ॥६२॥
शरीरेचमहादुःखे मानसे चमहाज्वरे ।
आदिव्याधि भयेविघ्ने ज्वालोपद्रवकेषु च ॥६३॥
न भवेन्मे भयंकिन्चत् कवचे नावृतस्यमे ।
आगन्तुकामानखिला नस्मद्वसुविलुम्पकान् ॥६४॥
निवारयतुदोर्दण्ड सहस्त्रेण महारथः ।

स्वोकरोद्धृतसाहस्स्र पाशवद्धांसुदुर्जयान् ॥६५॥
संरुद्धगतिसामर्थ्यान् करोतु कृतविर्यजः ।
सृणिसाहस्रनिर्भिन्नान्सहस्रशरखण्डितान् ॥६६॥
राजचुणामणिः क्षिप्रं करोत्वष्मद्विरोधकान् ।
खड्गसाहस्रदलितान् सहस्रमुशलार्दितान् ॥६७॥
चौरादिदुष्टसत्वौघान् करोतु कमलेक्षणः ।
स्वशङ्खनालसन्त्रस्तान् सहस्रारविदारितान् ॥६८॥
करोतुसर्वदुष्टौघान् सहस्रारसहस्रधृक् ।
कृतविर्यसुतोराजा सहस्रभुजमण्डितः ॥६९॥
अवतारो हरेःसाक्षत् पालयेत्सकलंमम ।
अनेनमन्त्रेणगतं तत्तत् वस्तु च प्राप्यते ॥७०॥
कार्तवीर्यार्जुनोनाम राजावाहुसहस्रवान् ।
तस्यस्मरणमात्रेण गतंनष्टं च लभ्यते ॥ ७१॥
योभवेल्लोकरक्षार्थ मंशाचक्रं हरेर्भुवीः ।
तंनमामि महावीर्य मर्जुनं कृतविर्यजम् ॥७२॥
सहस्रवाहुंससरंसचापं
रक्तांवरंरक्तकिरिटकुण्डलम् ।
चौरादिदुष्टभयनासनमिष्टदंतं
वन्देमहावल विजृम्भितकार्तवीर्यम् ॥७३॥

अथोत्थान मन्त्रप्रार्थना

कार्तवीर्य महावीर्य सर्वदुष्ट विनासनः ॥



सर्वत्रसर्वदातिष्ट दुष्टांनाशय पाहिमाम् ॥७४॥
दक्षपञ्चशतंवाणान् वामेपञ्चशतंधनुः ।
योविभर्तिसपात्वष्मान्-विघ्नव्यालशताकुलान् ॥७५॥
उत्तिष्ठदुष्टदमनसप्त द्विपैकपालक ।
त्वमेवशरणं प्राप्तं शर्वतोरक्षरक्षमाम् ॥७६॥
उत्तिष्ठकिं त्वं स्वपिषी किंतिष्ठसिचिरायसि ।
पाहिनःसर्वदासर्व भयेभ्यः स्वसुतानिव ॥७७॥
ये चौरावसुहर्त्तारौ विद्विषो येच हिंसकाः ।
अन्तरायकरा दुष्टा श्छद्मकाये दुराशय ॥७८॥
दुःखदादुष्टभुपाला दुष्टाऽमात्याश्च पालकाः ।
येत्त कार्यविलोप्तारो ये खला परिपन्थिनः॥७९॥
सर्वश्वहारिणो ये च ये च माया विनोऽपरे ।
महाक्लेशकराम्लेच्छा दश्यवो वृषलाश्चये ॥८०॥
ये महागरदातारो वञ्चकाःशस्त्रपाणयः ।
येपापा दुष्टकर्माणो दुःखदा दुष्टबुद्धयः ॥८१॥
व्याधकाः कुपथाशक्ता ये च नाना भयप्रदाः ।
छिद्रान्वेषरतांनित्यं येऽस्मान् बाधितुमुद्यताः ॥८२॥
ते सर्वे कार्तवीर्यस्य महाशंखरवाहताः ।
सहसा विलयं यान्तु दूरादेव विमोहिताः ॥८३॥
ये दानवा महा दैत्या येयक्षा ये च राक्षसाः ।
पिशाचायेमहासत्वा- येभूताब्रह्मराक्षसाः ॥८४॥

अपस्मार ग्रहायेचयेग्रहाःपिशिताशनाः ।
महालोहितभोक्तारो वेतालाये च गुह्यकाः ॥८५॥
गन्धर्वाऽप्सरसःसिद्धा येचदेवादियोनयः ।
डाकिन्योघोणसाःप्रेता क्षत्रपालाविनायकाः ॥८६॥
महाशना वलिभुजो महाकुणप भोजनः ।
महाब्याघ्र महामेघ महातुरग रुपकाः ॥८७॥
महागजमहासिंह महामहिष सन्नीभाः ।
ऋक्षवाराह शुनका वानरो लुकमुर्तयः ॥८८॥
महोष्टखरमार्जार सर्पगोवृषवृस्चिका ।
नानारुपा महासत्वा नानाक्लेशसहस्रदाः ॥८९॥
नानारोगकराःक्षुद्रा महाविर्यामहावला ।
वातिकाःपैतिकाघोरा स्लेष्मिकाःसान्निपातिका ॥९॥
माहेस्वरावैस्णवाय वैरिञ्चास्चमहाज्वराः ।
स्कान्दावैनायकाःक्रूरा येवैप्रथमसम्भवा ॥९१॥
महाँ मात्रिगणा रौद्रा महामारी मसुरीकाः ।
एकाहिकाद्वाहिकाष्च त्र्याहिकाष्च महाज्वराः ॥९२॥
चातुर्थिकाःपाक्षिकास्च मास्याषाण्मासिकास्चये ॥
संवत्सरादुर्निवार्या- ज्वराःपरमदारुणाः ॥९३॥
स्वाप्निकास्चमहोत्पाता येचदुःस्वप्निका ग्रहाः ।
कुष्माण्डाजृम्भकाभौमा घोणसानिधिपञ्चकाः ॥९४
भ्रामकाःप्राणहर्तारो येचवाल ग्रहादयः ।



मनोबुद्धीन्द्रियहरा स्फोटकास्च महाज्वरा ॥९५॥
दिवाचरारात्रीचरा येचसन्ध्यासुदारुणाः ।
प्रमत्तम प्रमत्तंवा येमांवाजि तुमुद्यताः ॥९६॥
ते सर्वे हैहयेन्द्रस्य धनुर्मुक्त शरार्द्दिताः ।
सहस्रधा प्रणस्यन्तु भग्नसत्वबलोद्यमाः ॥९७॥
ये सर्पाये महानागा महागिरि गुहाशयाः ।
कालव्याल महाद्रंष्ट्र महाऽजगरसंज्ञकाः ॥९८॥
अनन्तकुलिकाद्याश्च दंष्ट्राविप महाभया ।
अनेकशतशीर्षास्च खण्डपुच्छास्च दारुणाः ॥९९॥
महाविषजलौकास्च बृस्चिका रक्तपुच्छका ।
आशीविषाकालकुटा महाहाला हलायुधाः ॥१००॥
जलसर्पा जलव्याला जलग्रहास्च कच्छपाः ।
मत्स्यकाबिषपुच्छास्च येचाऽन्येजलवासिनः ॥१०१॥
जलजाःस्थलजास्चैव नानाभेदसतोद्भवाः ।
येचषड्विन्दवो लूताभ्रामरा सुकपुच्छकाः ॥१०२॥
स्थावरा जंगमास्चैव कृत्रिमास्च महाविषाः ।
गुप्तरुपा गुप्तविषा मूषका गृहगोधिकाः ॥१०३॥
अपस्मारविषाघोरा महोपविष संज्ञकाः ।
येऽस्मान्वाधि तुमिच्छन्ति शरीरे प्राणनाशका ॥१०४।
तेसर्वे कार्तवीर्यस्य खड्ग साहस्रखंडिता ।
दुरादेव विनस्यन्तु प्रणष्टे न्द्रियसाहसाः ॥१०५॥

बिषोपशमनेष्वयं मन्त्र

मनुष्या पशवस्चर्क्षा वानरा वनगोचराः ।
सिंहव्याघ्र वराहस्च महिषा येमहामृगाः ॥१०६॥
गजास्तुरंगागवया रासभाः सरभावृकाः ।
सुनकाद्विपिनसृङगा मार्जाराविललोलुपाः ॥१०७॥
श्रृङ्गालाः शशकाःश्वेना गरुत्मन्तो विहंगमा ।
भेरुण्डावायसागृध्रा हंसाद्याः पक्षिजातयः ॥१०८॥
उदि्भजास्चाण्डजास्चैव स्वेदजास्च जरायुजाः ।
नानाभेद कुलेजाता नानारुपाः पृथिग्विधाः ॥१०९॥
येऽस्मान्बाधितुमिच्छन्ति सन्ध्यासुच दिवानिशि ।
तेसर्वे कार्तवीर्यस्य गदासाहस्रचूर्णिताः ॥११०।
दूरादेव विनश्यन्तु विनष्टगति पौरुसाः ।

एतद्भयविनाशनायाऽयं मन्त्रः

येचाऽऽक्षेप प्रदातारो द्वेष्टारो येविदुषकाः ।
कृत्यायन्त्रप्रकर्तारः कुटमाया विनस्चये ॥१११॥
मारणो च्चाटनन्मूल द्वेषमोहन कारकाः ।
विश्वासघातकाः दुष्टा येचश्वामीद्रुहोनराः ॥११२॥
ये चाऽऽततायिनो दुष्टाये पापागोप्रहारिणः ।
दाहोपघातगरल शस्त्रपातिति दुःखदाः ॥११३॥
क्षेत्रवित्ताप हरण बन्भनादि भयप्रदाः ।
इतयोविविधाकारा येचाऽन्येदुष्टजातयः ॥११४॥



पिडाकराय सततं छिद्रमिच्छ न्तिवाधितुम् ।
ते सर्वेकार्तवीर्यस्य गदासाहस्रखण्डिताः ॥११५॥
दुरादेव विनश्यन्तु विलयंयान्तु सर्वदा ।
एतान्यरिष्टन्यनेन मन्त्रेणसमयान्ति च ॥११६॥
येमेघाये महावर्षा येवाताया स्चविद्युतः ।
येमहासनयोदिप्ता येनिर्घातासुदारुणाः ॥११७॥
उल्कापाताश्च येघोरा येमहेन्द्रा युधादयः ।
सूर्येन्दुकुलसौम्याश्च गुरुकाव्यसनैश्चराः ॥११८॥
राहुश्च केतवो घोरा नक्षत्राणीच राशयः ।
तिथयःसंक्रमामासा हायना युगनायकाः ॥११९॥
मन्वन्तराःधिपाःसिद्धा ॠषयोयोग सिद्धयः ।
निधयश्चर्ग्यजुहु सा-माऽथर्वणाद्यास्चवन्हयः ॥१२०॥
क्रतवोलोक पालश्च पितरो देवसंहति ।
विद्याश्चैव चतुःषष्टी भेदोत्थाभुवन त्रये ॥१२१॥
इतेवैकर्तिता सर्वे येचाऽन्य नाऽनुकिर्तिता ।
तेसन्तुनःसदासौम्याः सर्वकालसुखावहाः ॥१२२॥
आज्ञया कार्तवीर्यस्य योगिन्द्र स्याऽमितद्युते ।
एतेश्वरिष्टेश्वनेन मन्त्रेणसमयन्ति अथनामानि ।

ईश्वर उवाच

अथनामानीवक्षेऽहं दिव्यानीपरमेश्वरी ॥१२३॥
कार्तवीर्यस्य भूपस्य शिष्टानां रक्षणाय च ।

कार्तवीर्यार्जुनोधन्वि राजेन्द्रो हैहयेश्वरः ॥१२४॥
दत्तात्रेय प्रियतमः सहस्रभूज मण्डितः ।
चापिखड्गिरथीवाणी तुणिवर्मिमहाबलः ॥१२५॥
सुभगःसुमुखःशान्त स्चक्रवर्ति गुणाकरः ।
दसास्यदर्पहारेवा केलितृप्तः सुदुर्जयः ॥१२६॥
दुखहा चौर दमनो राजराजेश्वरः प्रभुः ।
सर्वज्ञःसर्वदःश्रीमान् सर्वशिष्टेष्टदकृति ॥१२७॥
राजचुडामणिर्योगि सप्तद्वीपाधि नायकः ।
विजयिविश्रुतो वाग्नि महागतिरलोलुपः ॥१२८॥
येज्वाविप्र प्रियो विद्वान व्रह्मज्ञेयः सनातनः ।
माहिष्मतिपतिर्योद्धा माहकृतिर्महाभुजः ॥१२९॥
सुकुमारो महाविरो मारिग्नो मदिरेक्षणः ।
सत्रुघ्नःसाश्वतःसुरः- संखभृद्योगिवल्लभः ॥१३०॥
महाभागवतोधिमान् महाभय विनासनः ।
असाध्यविग्रहोदिव्य भावोव्याप्त जगत्त्रयः ॥१३१॥
सर्वशास्त्र कलाधारो विरजो लोकबन्दितः ।
विरोविमलसत्वाढ्यो महाबलपराक्रमः ॥१३२॥
विजयश्री मयोमान्यो जितारीर्मन्त्रनायकः ।
खड्गभृत्कामदःकान्त कालघ्नःकमलेक्षणः ॥१३३॥
भद्रवाद प्रियोवैद्यो विवुधोवरदो वसि ।
जितेन्द्रियोजितारातिः स्वच्छन्दोऽनन्तविक्रमः ॥१३४॥



चक्रभृत्परचक्रघ्नः संग्रामविधि पूजितः ।
महाधनोनिधिपति र्महायोगि गुरुप्रियः ॥१३५॥
याधाढ्यःसर्वरोगघ्नो राजिताऽखिल भूतलः ।
दिव्यास्रभृदमेयात्मा सर्वगोप्तामहोज्ज्वलः ॥१३६॥
सर्वायुध धरोऽभिष्ट प्रदः परपुरञ्जयः ।
योगसिद्धोमहाकायो महावृन्दशताधिपः ॥१३७॥
सर्वज्ञाननिधिःसर्व सिद्धिदान कृतोद्यमः ।
इत्यष्ट सतनामोत्था मूर्तयोदशदिक्पथि ॥१३८॥
सम्यग्दश दिशोव्याप्य पालयन्तुच मां सदा ।
स्वस्थाःसर्वेन्द्रियाः सन्तु-शान्तिरस्तुसदाममः ॥१३९॥
शेषायामूर्तयोऽष्टौच दिक्रमेणै वभाष्कराः ।
अग्निनिऋतिवायवी शकोणगाःसन्तुमांसदा ॥१४०॥
मनःसौख्य मसंबाध मारोग्य मपराजयः ।
दुःखहानिरविघ्नश्च प्रजावृद्धिः सुखोदय ॥१४१॥
वाञ्छाप्तिरतिकल्याण मवैषम्य मनामयम् ।
अनालस्यमभिष्टंच मृत्युहानिर्वलोनति ॥१४२॥
भयहानीर्यशः कृतिर्विद्या वृद्धिर्महोदयम् ।
दिर्घायुष्यंमहोत्साहः- सौकुमार्यमभिप्सीतम् ॥१४३॥
अनष्टद्रव्यता चैव नष्टस्य पुनरागमः ।
अप्रधृष्य मनस्त्वंच महासामर्थमेव च ॥१४४॥
सन्तुमेकार्त वीर्यस्य हैहयेन्द्र स्यकिर्तनात् ।

य इदं कार्तवीर्यस्य कवचंपुण्यवर्धनम् ॥१४५॥
सर्वपापं प्रसमनं सर्वोपद्र पनासनम् ।
सर्वशान्तिकरं गुह्यं समस्तभयनासनम् ।१४६॥
विजया र्थप्रदंनृणां सर्वसम्पत् प्रदंशिवम् ।
श्रृणुयाद्वापठेद्वाऽपि सर्वान्कामानवाप्नुयात् ॥१४७॥
मुच्यतेसर्वदुखेभ्यः सर्वत्रविजयी भवेत् ।
मारीचौरादिपिडाद्यै-र्न कदाचित्प्रवाद्यते ॥१४८॥
पठतः प्रातरुत्थाय दुःस्वप्नादि विनश्यति ।
लभतेवाञ्छितानर्थान् पूज्यतेत्रिदशैरपिः ॥१४९॥
शैयातल गतोरात्रौ य इदं कवचंपठेत् ।
नतस्य तस्करारापि दुःस्वप्नादिकृतंभयम् ॥१५०॥
चौरैर्यदाहृितंपश्येत् पश्वा दिधनमात्मनः ।
सप्तवारांस्तदाजप्त्वा निशिपश्चिमदिङ्मुख ॥१५१॥
सप्तरात्रेण लभते नष्टद्रव्यं न संशयः ।
सप्तविंसतिधाजप्यात् प्राचिदिग्वदनोयदि ॥१५२॥
तदादेवा सुरनिभं परचक्रं निवारयेत् ।
विवादेकलहेघोरे पञ्चधायःपठेदिदम् ॥१५३॥
विजयो जायतेतस्य न कदाचित्पराजयः ।
संम्यग्द्वादशधारात्रौ- प्रजपेद्वन्धमुक्तयेः ॥१५४॥
त्रिदिनान्निगडग्रस्तो मुच्यतेनाऽत्रसंशय ।
अनेनैव विधानेन सर्वसाधनकर्मणि ॥१५५॥



असाध्यमपि सप्ताहात्- साधयेन्मन्त्रवित्तमः ।
यात्राकालेपठित्वेदं मार्गंगच्छतियःपुमान् ॥१५६॥
नतस्यचौरव्याघ्राद्यै- र्भयंस्यात्परिपन्थीभिः ।
नित्यं गृहगतो जप्त्वाकल्याणैःपरिपुर्तये ॥१५७॥
न भयंजायतेतस्य दुष्टसत्वादिभिक्वचित् ।
सर्वरोगप्रपिडाषु त्रिधावा पञ्चधा पठेत् ॥१५८॥
सरोग मृत्युवेताल भूतप्रेतैः प्रमुच्यते ।
जपन्नासेचनं कुर्या-ज्जलेनाऽञ्जलिना तनौ ॥१५९॥ न
चाऽसौ विषकृत्यादि रोगस्फोटैः प्रवाध्यते ।
त्रिसन्ध्यं यः पठेद्वैतत् षण्मासम्विजेतिन्द्रियः ॥१६०॥
कालमृत्युमपिप्राप्तं विजयान्नास्त्यत्रसंशयः ।
पठतःकवचंत्येतद्विषं नाक्रमतेतनौ ॥१६१॥
नजडान्धत्वमुकत्वं नोपसर्गभयंक्वचित् ।
विशत्यर्णोक्तविधिना ध्यात्वादेवं तदात्मकं ॥१६२॥
मन्त्रीगुरु प्रसादस्त्वं मन्त्रराजं जपेत्पुन ।
कवचेनावृतोभूयो मन्त्रध्यानं समाचरेत् ॥१६३॥
आदौसंवोधनंकृत्वा तन्नामध्यान पूर्वकम् ।
चतुरश्चक्रमाद्वर्णा नुच्चरेद्बीजपुर्वकान् ॥१६४॥
शरिरन्यासमेवंहि यः करोति समाहितः ।
स यथोक्तंलभेत्सद्यः फलंब्रजतनुर्भवेत् ॥१६५॥
कार्तवीर्यः फलद्वेषि कृतविर्य सुतोवलि ।

सहस्रवाहुसत्रुघ्नो रक्तवासाधनुर्धरः ॥१६६॥
रक्तगन्धोरक्तमाल्यो राजा स्मर्तुरविस्तरः ।
यथातथेदं कवचं कस्यचिन्नप्रकाशयेत् ॥१६७॥
गोपनियंप्रयत्नेन शिवस्यवचनंयथा ।
सुभक्तायसुशिष्याय दद्यात्सर्वस्वदायिने ॥१६८॥
साधकानां हितार्थाय यदुक्तंचन्द्रमौलिना ।
कार्तवीर्यस्य कवचं यदुक्तंवै मया तव ॥१६९॥
येन संरक्षितो देवि कालेनापि नजीर्यत ।
तस्मात् सर्वप्रयत्नेन कवचंधारयेत् सुधीः ॥१७०॥
यशस्यं स्वर्ग्यमायुष्यं पुत्रपौत्रप्रवर्धनम् ।
सर्वान कामानवाप्नोति इह लोके परत्रच ॥१७१॥
अव्यात्सर्वभयात् प्रभाकरनिभः-प्रद्योतनोद्द्योतन ,
स्वर्णस्रक्परिवीतकन्धरधरो रक्तांशुकोष्णीषवान् ।
नानाकल्पविभूषितः करसह-स्रार्धात्तवाणासनो ,
बाणात्तार्धसहस्रबाहुरनिशं- भूवल्लभोनः प्रभु ॥१७३॥

अथ श्रीकार्तवीर्यस्तोत्रम्

ॐ नमःकार्तवीर्याय सूर्याय विपुलौजसे ।
अर्जुनाय रमाधाम्ने सीम्ने नृपतितेजसे ॥१॥
चन्द्रवंशाऽब्धिचन्द्राय हैहयान्वयभावने ।
कृतवीर्यमहाराज सूनवे विष्णुमुर्तये ॥२॥
श्रीमच्छ्चालधरा गर्भ सम्भवाय महात्मने ।



निवृत्तराग द्वेषाय प्रोषितशेष मृत्यवे ॥३॥
दत्तात्रेयैक शिष्याय जितक्रोधाय योगिने ।
माहिष्मति पुरेशाय सहस्राऽयुत बाहवे ॥४॥
नर्मदा सलिलक्रिडाऽऽ-सक्तमानस वृत्तये ।
सप्तद्वीप निखातोरु यूपस्तम्भाय यज्वने ॥५॥
राज्ञे सकल भूपाल श्रेणिकाचक्रवर्तिने ।
आदिष्ट ह्रितवित्ताय नष्टद्रव्य प्रदायिने ॥६॥
स्मृतिमात्रतिलप्रस्थ प्रदानफलदायिने ।
सुन्दरी कृतदौःस्थ्याय सर्वसम्पत् प्रदायिने ॥७॥
भक्तनु रक्तचित्ताय त्रिलोकि गितकिर्त्तये ।
कुमार्ग निरतध्वंस दीक्षलम्पट चेतसे ॥८॥
सन्मार्ग तत्परित्राण व्रत पारायणात्मने ।
दुर्मान मत्तलङ्केश गर्वसर्वस्व हारिणे ॥९॥
दशास्य बन्धनिर्मोक्ष प्रल्हादित पुलस्तये ।
नमः कृपाशेवधये धैर्यैक निधये नमः ॥१०॥
नमः सौन्दर्यनिधये चातुर्यै निधये नमः ।
गुणामृत रसादिष्ट लोकानन्द धियेनमः ॥११॥
विलोपित खलक्लिष्ट जगद्वेपथवे नमः ।
एभिर्योनामभिः पुण्यैः कार्त्तवीर्यार्जुनंविभुम् ॥१२॥
नमस्करोति यःसायं प्रातर्वै भक्तिसंयुतः ।
तस्यश्वापदादिचौर भयंनोविद्यते क्वचित् ॥१३॥

द्रव्याणि न विनश्यन्ति प्रत्यायान्ति ह्रितान्यपि ।
वर्द्धन्ते सुखसौभाग्य बलपुण्यानि नित्यशः ॥१४॥
धनु:पञ्चसतंसव्ये दक्षिणेतावतः शरान् ।
विभ्रत्सकार्तविर्योऽसौ- चौरेभ्योरक्षतादिह ॥१५॥
कार्त्तविर्यः खलद्वेषी कृतवीर्यसुतो बली ।
सहसबाहुः शत्रुघ्नो रक्तवासाधनुर्धर ॥१६॥
रक्तगन्धो रक्तमाल्यो राजा स्मर्तुरभीष्टद ।
एतद् द्वादशनामानि कार्तवीर्यस्य संपठेत् ॥१७॥
सम्पदस्तस्य जायन्ते जनास्तस्य वशं गताः ।
सर्वदुष्टहरंदेवं दैत्यानां मदभञ्जनम् ॥१८॥
माहिष्मतीपुराधीशं वन्देऽहं हैहयेश्वरम् ।
कार्त्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ॥१९॥ तस्य
संस्मरणादेव लोको भवति निर्भयः ।
योऽभवल्लोकरक्षार्थ मंशाचक्रं हरेर्भुवि ॥२०॥
तं नमामि महाविर्य मर्जुनं कृतवीर्यजम् ।
कार्त्तवीर्य महावीर सर्वदुष्टविनासन ॥२१॥
सर्वत्र सर्वदातिष्ठ दुष्टान्नाशयपाहिमाम् ।
उत्तिष्ठ दुष्टदमन सप्तद्वीपैकपालक ॥२२॥
त्वामेव शरणंप्राप्तं सर्वतो रक्ष रक्ष माम् ।
द्युष्टघ्नत्वंकिंस्वपिषि किं तिष्ठसि चिरापदि ॥२३॥
पाहि नः सर्वदा सर्वभयेभ्यः स्वसुतानिव ॥२४॥



इति श्रीकार्तवीर्योपासनाध्याये कार्त्तवीर्यस्तोत्रं समाप्तम्

## अथ कार्त्तवीर्याऽर्जुनदीपदानविधानम्

### डामरश्वरतन्त्र

### श्री दव्युवाच

देवदेव महादेव भक्तानु ग्रहकारक ।
प्रसन्नो यदि देवेश ममाऽभीष्टंवद प्रभो ॥१॥

### श्री शिव उवाच

याचस्व गिरिजे देवि वरं च मनसेप्सितम् ।
गोप्याद्गोप्यतरं किंवा नास्तिचाग्रे तवप्रिये ॥२॥
मनःसन्तोषजनकं ददेऽहं वरमुत्तमम् ॥

### देव्युवाच

इति चेद्वचनं सत्यंभगवन्भवतो धुना ।
पृच्छामित्वां सुरश्रेश्ठ लोकानां हितकाम्यया ॥३॥
कार्त्तविर्यस्य नृपते र्वद दीपविधिं प्रभो ।
दीपभेदांश्च विविधान् वर्त्तिभेदांश्तथैवच ॥४॥
मन्त्रभेदान् स्थानभेदान् पात्रभेदांश्तथैवच ।
वक्तव्यं तस्य देवस्य मानमाजस्य गोपतेः ॥५॥
पात्रमानंकियत्प्रोक्तं कस्मिन्कार्येकदा भवेत् ।
दीपादौ शकुनं चैव षट्कर्म च कथंभवेत् ॥६॥
साधकानां हितार्थाय कृपया वदमे प्रभो ।
कस्मिन्मासेतथाऽरम्भः कस्मिन्पक्षेतिथौ प्रभो ॥७॥

कस्मिन्वारे कदा काले को विधिश्चाऽस्यभूपतेः ।
दीपदानं प्रियं तस्यकथंप्रोक्तं महेश्वर ॥८॥
तस्या कृतिस्तथा देव धातुनां केन निर्मिमेत् ।
पूजनेच विशेषः क-स्तत् सर्वं वदमे प्रभो ॥९॥

ईश्वर उवाच

साधुसाधु महाप्रज्ञे इदं पृष्टं त्वया कथम् ।
यन्नकस्यचिदाख्यातं मया पूर्वं वरानने ॥१०॥
पृच्छते कार्तीकेयाय न प्रोक्तं देवि सुन्दरी ।
अधुनाच त्वया पृष्टं वाचंबद्ध्वा तिदुर्जयी ॥११॥
अतः परं च देवेशी मम सत्यं तदा भवेत् ।
यदि ते वच्मीतत् सर्वंकार्त्तवीर्यस्य गोपतेः ॥१२॥

देव्युवाच

नाऽख्येहं तन्मयादेव भवद्वचनमन्यथा ।
तत् सर्वं वद मे क्षिप्रं कृपांकृत्वा ममोपरि ॥१३॥

ईश्वर उवाच

श्रृणुदेवि प्रवक्ष्यामि लोकानुग्रहकारकम् ।
गुह्यंच मम सर्वस्वं न चाख्येयं दुरात्मने ॥१४॥
विद्यांचौरायनो दद्यात् परशिष्यायनो वदेत् ।
न स्तेयायां विनीताय परदाररतायच ॥१५॥
न सुरापाय गिरीजे ब्रह्मघ्नायात तायिने ।
नवदेत् पिशुनायापि दीपभेदान् सुरेश्वरी ॥१६॥



दीपपात्रं नवं कार्यं महत्कार्यं विशेषतः ।
सौवर्णराजतं ताम्रं कास्यं लौहंचमृन्मयम् ॥१७॥
गोधुम माष मुद्गानां चूर्णेन घटितं तथा ।
सौवर्णे कार्यसिद्धिस्या द्रौप्येवश्यंजगद्भवेत् ॥१८॥
ताम्रं तयोरभावेऽपि कांस्ये विद्वेषणं भवेत् ।
मारणंलोहपात्रे तू-च्चाटनं मृन्मये भवेत् ॥१९॥
गोधुमचुर्णघटिते विवादेविजयो भवेत् ।
माषेशत्रुमुखस्तम्भो मौग्देस्याच्छान्तिरुत्तमा ॥२०॥
सन्धिकार्ये नदीकुल-द्वयमृत्स्नां तु कारयेत् ।
अलाभे सर्वपात्राणां ताम्रे कुर्याद्वीचक्षणा ॥२१॥
सप्तपञ्चतथा तिस्र एकावावर्तिका भवेत् ।
अयुग्मा वर्तिका ग्राह्या एकोत्तरसतावधि ॥२२॥
गुरुकार्येऽधिकाकार्या अल्पेत्वल्पा मताप्रिये ।
सूत्रंश्वेतं तथापितं-माञ्जिष्ठं च कुसुम्भकम् ॥२३॥
कृष्णंच कर्बुरं चैव षट्कर्मणि नियोजयेत् ।
सर्वाभावे सितेनैव कुर्याद्वर्ति पृथक् पृथक् ॥२४॥
दशपञ्चाधिका चैव विंसत्त्रिंशत्तथैव च ।
चत्वारिंशच्च चत्वारि तदर्धमपि कारयेत् ॥२५॥
अष्टोत्तरसहस्रं वा शतं पञ्चासदेव वा ।
तत्तत्कार्य वशात्देवि कुर्यात्तन्तुसमाहित ॥२६॥
षट्कर्मणितथाकुर्यात् साधकश्च सुबुद्धिवान् ।

चत्वारिंशद्द्वयधिकांश्च नित्यदिपंतुकारयेत् ॥२७॥
तदर्भमपि च प्रोक्तं देवि विश्वार्तिहारिणी ।
गोघृतेन प्रकर्तव्यो दीप सर्वार्थसिद्धये ॥२८॥
मारणे माहिषंप्रोक्त मौष्ट्रं विद्वेषणे भवेत् ।
आविकेशान्तिरुक्तावै आज्ये चोच्चाटनंतथा ॥२९॥
तिलतैलेन दिपस्यात् सर्वकार्यार्थसिद्धये ।
यथाकथञ्चिद्देवेशि दीपकार्य प्रयत्नतः ॥३०॥
नित्यदीपं तु देवेशि घृतेनैव तु कारयेत ।
घृतत्य नियमोनास्ति नित्यदिपे सुरार्चने ॥३१॥
गव्यं वा माहिषंवापि नित्यदीपेतुवै घृतम् ।
आज्यमानं पत्रमानं स्वपुत्रायाऽपिनो वदेत् ॥३२॥
गोप्याद्गोप्यतरं देवि तस्मात्तन्नप्रकाशयेत् ।
अथाऽभिधीयतेमान माज्यस्य वरवर्णिनि ॥३३॥
साधकानां हितार्थाय सर्वकार्यार्थ सिद्धये ।
पलानां पञ्चविंसत्या दीपो देयोऽर्थसिद्धये ॥३४॥
पञ्चासद्भिर्घृतपलै श्चौरशान्त्यै तु कारयेत् ।
शत्रुवश्यायचतथा सन्धिकार्ये तथा स्मृतम् ॥३५॥
पञ्चभिः सप्तभिर्देवि शत्रुणां स्यात्पराजयः ।
शतेनशत्रुनाशःस्यात् सहस्रेणाऽखिलाःक्रियाः ॥३६॥
कुर्याद्दशसहस्रैश्च राज्यंप्राप्त्यंतथैवच ।
कुर्याद्वै त्रिसहस्रेण मुक्त्यै निगडबन्धनात् ॥३७॥



अथवा द्विसहस्रेण सहस्रेणाऽपि वाभवेत् ।
नष्टप्राप्त्यै तु कुर्वीत सहस्रपलसंख्यया ॥३८॥
कन्याकांक्षि प्रतिदिनं पलेन त्रिंशताददेत् ।
दिग्रुद्रदिनसंख्यातं दीपं दद्यात्प्रयत्नतः ॥३९॥
रोगनाशाय च तथा चतुर्दशदिनावधि ।
पलैर्विंशति भिर्देय-श्चौरनाशाय सुव्रते ॥४०॥
बीजदघ्नपलैर्देयः सप्तरात्रं सुरेश्वरि ।
राजानंवशयेत् क्षिप्रं नाऽत्रकार्या विचारणा ॥४१॥
क्षुद्ररोगविमुक्त्यर्थं पलेन त्रिंशता ददेत् ।
भूतप्रेत पिशाचादि डाकिनीतर्जनाय च ॥४२॥
पञ्चविंशतिभिर्देय स्तेषां नाशः स्वयंभवेत् ।
ग्रहपिडाषु चोग्रासु पलैःषोडशभिःस्मृतः ॥४३॥
सिंहव्याघ्रादि जन्तुनां शान्त्यैकुर्याच्छतत्रयम् ।
यात्राकाले दीपदानं कुर्वीताऽष्टपलैः प्रिये ॥४४॥
भयंन जायते क्वाऽपि मार्गे तस्यवृकादितः ।
पुनः प्रयाति सधनः स्वस्थैर्सस्त्रैस्तथाऽम्विके ॥४५॥
चतुर्वर्गफलावाप्त्यै कुर्वीत प्रतिवासरम् ।
नित्यदिपे चन्द्रमानं भून्मर्द्धमपि वा भवेत् ॥४६॥
अतोऽधिकतरं कार्यं न न्युनं कारयेत्प्रिये ।
घृताभावे तु तैलेन दीपोदेयः प्रयत्नतः ॥४७॥
मानंविना नकुर्वीत-मानंतैलोऽततः स्मृतम् ।

गुरुकार्येऽधिकंकार्यं लघुकार्ये लघुस्मृतम् ॥४८॥
सार्षपेण तुतैलेन शत्रुणां मारणं भवेत् ।
पुष्पयुक्तेन तैलेन मुखंसौगन्ध्यतां व्रजेत् ॥४९॥
मुखरोगेऽपि तत् प्रोक्तं मत्तमातङ्गगामिनि ।
यत्र नोक्तं हिमानं तु तत्रज्ञेयंपलं शतम् ॥५०॥
वास्त्र्यं च प्रकुर्वीत यत्र कार्यं न जायते ।
एष एव विधिः प्रोक्तःसर्वकर्मसु सुन्दरी ॥५१॥
यथाकथञ्चिद् देवेशि दीपं कुर्वीत भक्तितः ।
गुरूपदेशतः कुर्या-दन्यथा विफलं भवेत् ॥५२॥
अथाऽभिधियते पात्रमानं सुन्दरी कामिनि ।
सौवर्णंतुपरप्रोक्तं राजतं मध्यमं स्मृतम् ॥५३॥
ताम्रं तथाविधं प्रोक्त राजतं मध्यमंस्मृतम् ।
ततोऽधमंकांस्यपात्रं लोहंतस्मादधः स्मृतम् ॥५४॥
तत् तत् कार्यवशाद् देवि गृह्त्यं पात्रंतथा बुधैः ।
सहस्रपलसंख्यायां पात्रं पलशतः स्मृतम् ॥५५॥
यत्र प्रोक्ताऽयुतं संख्या तत्र नागशतं स्मृतम् ।
शतार्द्धपदमाने तु त्रिंशता पात्रमुत्तमम् ॥५६॥
पादोनशतसंख्यायां षट्त्रिंशं पात्रमुच्यते ।
शतमाने तदर्धं त-द्वयधिकं पलसंयुतम् ॥५७॥
सहस्रत्रितये प्रोक्तं सपादशतमुत्तमम् ।
सहस्रद्वितये पात्रं शतं पञ्चदशाधिकम् ॥५८॥



त्रिंशत्पलैस्तु यत्प्रोक्तं त्रिंशता तत्रवैभवेत् ।
दियुग्मपलसंख्ये तु प्रोक्तंमानं कलाभितम् ॥५९॥
शतत्रये शतंप्रोक्तं दिक्पलेदिक्पलं स्मृतम् ।
यत्र नोक्तं प्रमाणं तु तद्रुद्रद्वयसं भवेत् ॥६०॥
नित्यदिपे प्रमाणं तु पलैरग्निभिरम्विके ।
बुध्ने षडङ्गुलं प्रोक्तमुच्छ्रायेण षडङ्गुलम् ॥६१॥
षोडशाङ्गुलमायामे सुन्दरंपात्रमुत्तमम् ।
नित्यदिपे तदर्द्धार्द्धं मानं सर्वेशि सुन्दरी ॥६२॥
अतोन्युनं तुकार्य तत् पत्रमानं सुरेश्वरि ।
न्यूनाधिकंतुयः कुर्यात् तस्याऽऽयुर्वै प्रणश्यति ॥६३॥
तस्मान्न्यूनाधिकं मानं नकार्यं श्रेय इच्छता ।
एतद्गोप्यतरं देवि नदेयं यस्य कस्यचित् ॥६४॥
परशिष्याय नो देय-मात्मनःश्रेय इच्छता ।
दीपस्य शकुनान् वक्ष्ये श्रृणुष्वैकमनाः प्रिये ॥६५॥
येनं विज्ञानमात्रेण ज्ञायते च फलाऽफलम् ।
दीपारम्भे सुरेशानि न वदेदशुभं वचः ॥६६॥
तस्मिन् कालेयदुक्तंहि तत् तथैवभवेद्ध्रुवम् ।
वर्जयेदशुभां वाणीं तस्मिन् कालेविशेषतः ॥६७॥
तत्काले चेत्समायाति द्विजःप्रस्थानिकः शुभः ।
तत्क्षणाञ्जायतेकार्यं नाऽत्रकार्या विचारणा ॥६८॥
शुक्लाम्वरो द्वितियस्तु सोऽपि कार्यकरः स्मृतः ।

रक्ताम्वरतृतियस्तु रक्तमाल्यानुलेपनः ॥६९॥
दीपारम्भे समायाति तस्य सिद्धिर्न संशयः ।
शुद्रवर्णे समायाति सिद्धिः प्रोक्ता तुमध्यमा ॥७०॥
म्लेच्छस्य दर्शनं प्रोक्तं बन्धनं दीपदस्य वै ।
मर्जार मूषकादिना मधमं दर्शनं स्मृतम् ॥७१॥
कृते दीपवरे देवि वक्ष्यते च शुभाशुभम् ।
दीपज्वाला समाश्लक्ष्णा जायतेयदि सुन्दरी ॥७२॥
अष्टभिर्दिवसैस्तस्य कार्यसिद्धिर्न संशयः ।
दीपज्वाला तु देवेशि यदि वक्रा भवेत्तदा ॥७३॥
नाशस्तस्य च बन्धूनां प्रोक्तःसर्वार्थसिद्धदे ।
खरकण्ठप्रभाज्वाला यदियाच्च सुरेश्वरि ॥७४॥
दीपकर्तु सम्बधोर्वै जायते मरणं ध्रुवम् ।
दोपज्योत्स्नाम्बिकेकृष्णा जायतेचसुरार्चिते ॥७५॥
शत्रूणां जायते कार्यंदीपकर्तुर्निरर्थकम् ।
कृतेदीपे यदानाशस्तत्क्षणाञ्जायतेऽम्बिके ॥७६॥
कायासिद्धिर्विलम्वेन भविष्यति न संशय : ।
कृतदीपस्य नाशस्यात् प्रहरत्रयमध्यतः ॥७७॥
मासेवर्षेतथा प्रोक्ता कार्यसिद्धिर्हि सुन्दरी ।
दीपवर्यस्यनाशस्या-द्यदि रात्रौ कदाचन ॥७८॥
तस्यगेहगतंवस्तु नष्टं भवति निश्चितम् ।
दत्ते दपि यदिपुन-श्चटावचेति वै भवेत् ॥७९॥



शब्दस्तस्य च देवेशि राजतो भयमादिशेत् ।
कृते दीपेमहेशानि हुंहुं शब्दो यदा भवेत् ॥८०॥
तदा तस्य चकार्यंवै नष्टं जातं तदादिशेत् ।
वामत दीप वर्यश्चे- च्चौरतो भयमादिशेत् ॥८१॥
दीपमात्रं यदि पुनःस्रवते यदि सुन्दरी ।
गोनाशो जायते तस्य दीपकर्तुर्न संशय : ॥८२॥
दीपवर्यस्यपात्रं वै भग्नं चेत्दृश्यते यदा ।
अष्टादशदिनादर्वाग् यजमानः सबान्धवः ॥८३॥
धर्मराजस्य सदनं गच्छति प्रियकामिनि ।
दीपश्रेष्ठे पुनर्दीपंज्वालयेन्मूढमानसः ॥८४॥
दीपदाता दीपकर्ता मन्दचक्षुर्भवेत् सदा ।
कृते दीपे पुनर्वर्तिं कारयेद् यदि मानवः ॥८५॥
कार्यसिद्धिर्वै देवेशि षण्मासात् स्यादनन्तरम् ।
प्रज्वालिते दीपवर्ये अशुचिर्मानवः स्पृशेत् ॥८६॥
दीपकर्तुः शरीरेवा आधिः सञ्जायते ध्रुवम् ।
दीपश्रेष्ठेऽम्बिके श्वानो मार्जारा मूषकादयः ॥८७॥
यदि स्पृशन्ति कल्याणि ताडनं राजतो दिशेत् ।
एवं दीपवरे विघ्ना बहवः सम्भवन्ति हि ॥८८॥
तस्मात्दीपःसुरेशानि विलोक्यस्तु पदे पदे ।
आरम्भे प्रथमे देवि मास तिथ्यादिषु ब्रुबे ॥८९॥
मधुमासे भवेद् दुःखं माधवे रत्नसम्भवः ।

ज्येष्ठेमासि सुरेशानि मरणंजायते ध्रुवम् ॥९०॥
आषाढे वन्धुनाशःस्यात् पूर्णार्थः श्रावणे भवेत् ।
प्रजानाशो भाद्रपदे पुत्रयोगस्तथाऽऽश्विने ॥९१॥
कार्त्तिक स्वर्णलाभः स्यान्मार्गशीर्षे महोदयः ।
पौषे धनसमृद्धिः स्या-न्माघे मेधाविवर्धनम् ॥९२॥
धनलाभः फाल्गुने स्यान्मासानां कीर्तितं फलम् ।
आपूर्यमाणे पक्षे च दीपारम्भो विशिष्यते ॥९३॥
शुक्लपक्षप्रतिपद मारभ्य पौर्णमासतः ।
पञ्चम्यादिकनागान्त इष्यते कैश्चिदेषु तु ॥९४॥
दीपारम्भोरवौशुक्रे बुधेजीवेप्रशस्यते ।
सोमवारेतथाशस्तः शनिभौमोविवर्जयत् ॥९५॥
शनिर्मृत्युकरः प्रोक्तो- भौमोबन्धु विनासकः ।
तस्माद्भौमंशनिंचैव वर्जयद् दीपकर्मणि ॥९६॥
स्वातिपुष्यविशाखासु रोहिणीश्रवणेषूच ।
हस्तोत्तरात्रयंज्येष्ठा अस्विनीरौद्रमेवच ॥९७॥
दीपकर्मणिरुक्षाणि विज्ञेयानिप्रयत्नत ।
पूर्णिमासप्तमीचैव द्वितियापञ्चमीतथा ॥९८॥
त्रयोदशी च दशमी षष्ठी च द्वादशी तथा ।
तृतियाप्रतिपच्चैव दीपारम्भेतिथीःस्मृता ॥९९॥
सौभाग्यःशोभनस्चैव आयुस्मान्प्रितिरेवच ।
सुकर्माहर्षणश्चैव धृतिवृद्धिस्तथैवच ॥१००॥



ब्यतीपाते वैधृतौ च दीपयोगाउदाहृताः ।
बालवःकौवलस्चैव गरोवै करणानिच ॥१०१॥
वसन्तःशिशिरस्चैव हेमन्तः शिशिरस्तथा ।
वर्षावादीपयोगेतु शरत्प्रोक्ता विशेषत ॥१०२॥
चन्द्रसूर्यग्रहेचैवपद्मकेच विशेषतः ।
अर्द्धोदयेमहाष्टम्यां दीपारम्भोविशिष्यते ॥१०३॥
पूर्वान्हेवातथारात्रौ मध्यरात्रोविशेषतः ।
दीपदानंप्रशंसन्ति दीपदातारयेवच ॥१०४॥
एतेकालामया प्रोक्ता दीपदानेसुरेश्वरी ।
अथवाकार्यवशतो मासर्क्षादि नशोधयेत् ॥१०५॥
यदैवकार्य मुत्पन्नं तदैव गुरुवाक्यतः ।
दीपारम्भंवितनुयाद् गुरुर्निर्दिष्टमार्गतः ॥१०६॥
कार्त्तिके शुक्लपक्षे च सप्तम्यां भानुवासरे ।
वैष्णवर्क्षे व्यतीपाते तुलासंस्थेदिवाकरे ॥१०७॥
मकरस्थःक्षपानाथो- गराख्यंकरणंतथा ।
मध्यरात्रौयदायोग एतत्पर्वंमहोत्तमम् ॥१०८॥
सूर्यपर्वशतेभ्योऽपि अधिकं पुण्य वर्धनम् ।
तदल्पपुण्येन नरैर्लभ्यते न कदाचन ॥१०९॥
पूर्वयेन तुलादीनि महादानानि षोडश ।
दत्तानिविधिवत्पात्रे सम्प्राप्नोतिनचाऽपर ॥११०॥
एतत्पर्वमहापुण्यं कार्त्तवीर्यस्य भुपतेः ।

दीपदानं विषेशेण कर्तव्यं भूतिमीच्छता ॥१११॥
एतद्योगस्य दशकं नप्राप्नोति नराधमः ।
विद्वानपि न जानाति किमन्येदुष्टबुद्धयः ॥११२॥
एतत्पर्व महापुण्यं नाऽऽख्येयं दुष्टबुद्धये ।
इतद्योगे कृतोदीपः सहस्रदशसंख्यया ॥११३॥
पलेन विधिवद् देवि राज्यंप्राप्तमवाप्नुयात् ।
अधुना श्रृणु देवेशि दीपदानस्यवैविधिम् ॥११३॥
येनविज्ञानमात्रेण सर्वान्कामामवाप्नुयात् ।
उपोष्य पूर्वदिवसे सर्वभोगविवर्जितः ॥११५॥
अधःशायी भवेद्रात्रौ यावद्दीप विसर्जनम् ।
पूर्वधस्रेविधिंकृत्वा उत्थायब्राह्ममहूर्तके ॥११६॥
शौचाचारविधिं कृत्वा पादशौचंयथाविधि ।
आचम्य पूर्वमानीत मपामार्गजमव्रणम् ॥११७॥
द्वादशाङ्गुलमानं तु कीर्त्तितं दन्तधावनम् ।
उक्तमन्त्रेणतत्कृत्वाप्रातःस्नानंसमाचरेत् ॥११८॥
सन्ध्याविधिं स्वगेह्त्योक्तं कृत्वाऽसादनिकांचरेत् ।
कपिलागोमयंशुद्धं तात्कालिकमथानयेत् ॥११९॥
अनिर्द्दशाया रुग्णया अवत्सायास्तथैव च ।
गोमयंस्वैरचारिण्या वर्जयेत्तु प्रयत्नतः ॥१२०॥
अलाभे कपिलायास्तु अन्यासामानयेच्छकृत् ।
यथोक्तानां च धेनुनां गोमयं घृतमेवच ॥१२१॥



आनयत् स्वयमभ्यर्च्य तांधेनु वत्ससंयुताम् ।
दीपमात्रं तथाचिञ्चाअम्लमन्यत्तथैव च ॥१२२॥
विशुद्धास्तण्डुलाश्चैव रक्तचन्दनमुत्तमम् ।
रक्तपुष्पं रक्तगन्धं रक्तक्षौमं तथैवच ॥१२३॥
छुरीकां तीक्ष्णधारांच पञ्चगव्यंतथाविधम् ।
गोमुत्रंगोमयंक्षीरं दधि सर्पि तथैवच ॥१२४॥
पञ्चगव्यंपरिमाणं लोहवल्लैरुदाहृितम् ।
रसादित्यकलारुद्र वसूभिर्विपरीतवत् ॥१२५॥
सदृशंवस्त्रयुग्मंच श्रीफलं चन्दनं मधु ।
षोडशाङ्गुलमानंतु सौवर्णी तुशलाकिका ॥१२६॥
राजताउम्वरिवापि सुश्लक्ष्णा स्थुलबुध्नका ।
तीक्ष्णग्रासरलामध्ये त्रिशुलेनांकितातथा ॥१२७॥
त्रिधौतसूत्रवर्यंच कुङ्कुमाक्तमकृष्णकम् ।
शरावं पुष्पमालाष्च सर्वौषध्यःसशर्कराः ॥१२८॥
पल्लवान्पञ्चसंख्याकान् प्लक्षबोधिचराम्रजाम् ।
उदुम्बरःशमिचेति सिद्धार्थाश्च कुशानपि ॥१२९॥
तात्कालिकं चोदपुर्णं कुम्भंस्वादुफलानि च ।
पञ्चामृतंदधिपयो घृतंमधुस शर्करम् ॥१३०॥
वरणार्थंचाऽङ्गुलियं कर्णभूषणमुत्तमम् ।
अङ्गदंचोपवितं च वस्त्रयुग्मं तथैव च ॥१३१॥
एतान्यासाद्यपूर्वं तु त्रिकोणंरचयेत् ततः ।

द्वात्रिंशदङ्गुलारेखा दक्षिणादुत्तरावधि ॥१३२॥
द्वितीयांदक्षिणाग्रांतु प्रतीच्यवधिकारयेत् ।
तृतीयांतूत्तराग्रांतु प्रतीच्यग्रेचकारयेत् ॥१३३॥
रेखात्रयंसमंकार्यं द्वत्रिंशाङ्गुलसम्मितम् ।
तत्त्रिकोणं गोमयेन समुत्रेणोपलेपयेत् ॥१३४॥
पात्रमम्लेन संशोध्यं पञ्चगव्यैस्तथैव च ।
रक्षोभुत निवाराय दक्षिणाभिमुखींछरीम् ॥१३५॥
स्थापयेत्दीपपात्रात् तु देविदक्षिणतो दिशि ।
वरणंचततः कार्यं दीपार्थंचगुरोशुभे : ॥१३६॥
वस्त्राङ्गुलियादिदत्वा श्वेतमाल्यैस्तथाऽर्चयेत् ।
पादसंवाहनंकृत्वा- गुरुंयत्नेन तोषयेत् ॥१३७॥
सन्तुष्टेच गुरौदेवितुष्टोमाहिष्मतपितिः ।
गुरुणाचततोधार्यं दत्तं वस्त्रादिकंतथा ॥१३८॥
श्रीफलंचसमादाय गुरोरग्रे निवेदयेत् ।
भक्त्यासमागतोऽहंते पादयोर्भक्तवत्सल ॥१३९॥
दीपकार्यंचभगवन् सम्पाद्यं वैनमो नमः ।
इत्युक्त्वादण्डवद्भूमौ नमस्कुर्यात्पुनपुनः ॥१४०॥
गुरुणाज्ञानमार्गेण ज्ञात्वातस्याऽऽशयं ततः ।
दीपदानं ततःकार्यं चौरानाशादिहेतवे ॥१४१॥
आचम्य च प्राणायाम्य कुर्यात्सङ्कल्पमादृतः ।
माषपक्षेतिथिनांचप्रोच्चारणमथाऽपरम् ॥१४२॥



स्वकामानांचप्रोच्चार्य निक्षिपेदुदकंभुवि ।
कपिला गोमयेनैव षट्कोणंरचयेत्ततः ॥१४३॥
त्रिकोणांतस्तु षट्कोणं धृत्यङ्गुलमितं प्रिये ।
प्रथमंपूर्ववच्चैव त्रिकोणं रचयेत्तथा ॥१४४॥
त्रिकोणकोणात्पश्चात्तु प्रोच्चार्यद्वचङ्गुलं ततः ।
त्रिकोणस्थायायाम्यायाः-प्रोच्चार्यद्वचङ्गुलंतथा ॥४५
दक्षिणादुत्तरांयावत् रेखांकुर्यात्प्रयत्नतः ।
द्वितीयादक्षिणाग्रातु रेखाप्राच्यावधिःस्मृता ॥१४६
तृतीयांचोत्तराग्रां तुरेखां तद्वत्प्रकारयेत् ।
एवंषट्कोणंसम्पाद्य तन्दुलैःपूरयेत् ततः ॥१४७॥
षट्कोणानां तुकोष्ठाः स्युर्युग्माङ्गुलमिताःशुभाः ।
षडप्येवंविधातव्या मध्येस्यात्तुषडङ्गुलम् ॥१४८॥
रक्तचन्दनलिप्तैस्तु पूरयेत्सप्तकोष्ठकान् ।
तन्मध्येविलिखेद्वर्णान्-मूलमभ्या तुसुन्दरी ॥१४९।
मरविजंकर्णिकायं षट्कोणेविजषट्ककम् ।
दिक्षुविजचतुस्कंतु शेषैःसंवेष्टयेद्धितत् ॥१५०॥
तस्योपरि न्यसेद् दीपपात्रं चन्द्रमुखि प्रिये ।
सौवर्णांच शलाकांवै दीपपात्रे निवेशयेत् ॥१५१।
पार्श्वे दक्षिणतो देवि मुक्त्वासप्ताङ्गुलंशिवे ।
पात्रेप्रत्यङमुखंतस्मिन्-वर्त्तिकांस्थापयेत्ततः ॥१५२॥
घृतेनपूरणंकुर्यात् दीपज्वालां प्रकारयेत् ।

तंदीपंविधिनाऽऽपूज्य मूलेनाऽङ्गसमाचरेत् ॥१५३॥
कल्पोक्तविधिनादेवि अङ्गन्यासं समाचरेत् ।
पूर्वोक्तंयन्त्रराजं तु ताम्रपात्रेऽष्टगन्धकै ॥१५४॥
लिखित्वा स्थापयेद् दीपात् पूर्वभागे विचक्षणा ।
तत्र पूजादिकं कृत्वा कुर्यात् सङ्कल्प मादरात् ॥१५५।
मासपक्ष तिथी रुक्त्वा कामनांच स्वह्रिद् गतम् ।
वक्ष्यमाणेन मन्त्रेण जलं भूमौ विनिक्षिपेत् ॥१५६।
तारं पूर्वं समुद्धृत्य वक्तवृक्तं समुद्धरेत् ।
संयोजयेत तत्सोमा-र्द्धनादेन पुनःसति ॥१५७॥
व्योमार्द्धेन्द्वग्निना देव्या युक्तं तदपिसंवदेत् ।
वषट्कारं ततः स्वेद्वे कामराजंवदेत्ततः ॥१५८॥
कार्त्तवीर्यार्जुनायेति प्रोच्यं सर्वार्थसिद्धिदम् ।
माहिष्मतीनाथपदं सहस्रबाहुमुच्चरेत् ॥१५९॥
सहस्रक्रतुदीक्षितं दत्तात्रेयप्रियं तथा ।
ङेन्तान्येतानिसम्प्रोच्य आत्रेयायपठेत्ततः ॥१६०॥
अनसूयागर्भरत्नपदं ङेऽन्तं समाचरेत् ।
क्रोधविजं पाशबीजमिमं दीपं पुनर्वदेत् ॥१६१॥
गृहाणेतिपदं प्रोच्य द्वितियान्तं च साधकम् ।
रक्षेति द्वितीयंदेवि दुष्टान् नाशयनाशय ॥१६२॥
पातय द्वितय. प्रोच्य मायाविजं ध्रुवं तथा ।
स्वविजंमारबीजं च वामाक्षिबिन्दुसंयुतम् ॥१६३।



वन्हिजायां वदेत् पश्चान् मन्त्रशास्त्रविचक्षणः ।
अनेन दीपवर्येण पश्चिमाभिमुखेन च ॥१६४॥
मांरक्ष च वदेत्देवि देवदत्त पदंततः ।
वदप्रदानायपदं व्योमयुग्मं वदेत् ततः ॥१६५॥
करुणेन्दुसमायुक्तं नादेन च पुनः प्रिये ।
व्योमाग्निमायासंयुक्तं नादयुक्तंपुनस्तथा ॥१६६॥
तारं मारंद्वितियंच बीजंप्रोच्य वदेत् ततः ।
वन्हिजायांवदेच्चैव जलंभुविविनिक्षिपेत् ॥१६७॥
तपवर्गौ सनादौच वेदादिं वन्हिवल्लभाम् ।
पश्चिमाभिमुखोभूत्वा कृत्वाचकरसंपुटम् ॥१६८
सकृञ्जप्त्वा पुनर्मन्त्रो यथामन्त्रं समाहितः ।
तारंनारायणंसेन्दुं व्योमाग्निनादसंयुतम् ॥१६९॥
मायायुक्तं समुद्धृत्य प्रथमंमायया युतम् ।
उच्चरेच्चद्वितीयंतु बीजंस्याद्वन्हिवत्प्रभा ॥१७०॥
चक्रं वन्हिसमायुक्तं तारनादंयुतं प्रिये ।
तारमुद्धृत्य प्रजपेद् दीपाग्रेवै सहस्रकम् ॥१७१॥
अनेनविधिनादेवि कार्त्तवीर्यस्य गोपतेः ।
दीपोदेयः प्रयत्नेन सर्वकाममभिप्सता ॥१७२॥
प्रथमस्तुमनुःप्रोक्तो दीपदाने शताक्षरः ।
चत्वारिंशद्ग्रहारामो मनुःप्रोक्तस्तुभूपते ॥१७३॥
द्वितीयोनववर्णस्तु मन्त्रप्रोक्तो विशारदैः ।

दत्तात्रेय ऋषिःप्रोक्तो मन्त्रयोर्जगदम्बिके ॥१७४॥
देवताकार्त्तवीर्यश्च छन्दोऽनुष्टुबुदाहृतम् ।
विनियोगस्तुरक्षायै कीलकंमारबीजकम् ॥१७५॥
द्वितीयबीजेनाङ्गानि पौक्तानि गिरिजे प्रिये ।
नाऽनया सदृशी विद्याविद्यतेभुवनत्रये ॥१७६॥
इमौमन्त्रौ नवक्तव्यौ कृतघ्नाय यथार्थतः ।
गुरोराज्ञां पुरस्कृत्य दीपंकुर्वीतयत्नतः ॥१७८॥
अन्यथाहिकृतंलोके विपरितं फलंलभेत् ।
विधानंदीपदानस्य कृतघ्नपिशुनायच ॥१७८॥
ब्रह्मकर्मविहीनाय न वक्तव्यंकदाचन ।
नास्तिकायानदातव्य-मशिष्यायाऽपिनोवदेत् ॥७९
एतत्सारतरंदेवि न देयं यस्यकस्यचित् ।
सुभक्तायसुशिष्याय साधकाय विशेषतः ॥१८०॥
वक्तव्यं देविविधिना मम प्रीतिकरं शुभम् ।
किंबहुक्तेन भोदेवि कल्पोऽयमखिलार्थदः ॥१८१॥
अथकल्पोक्तमार्गेण न्यासं वच्मि शुभेक्षणे ,
द्वाभ्यां द्वितीयस्वरसंयाताभ्यां ।
द्वाभ्यां चतुर्थस्वरसंयुताभ्याम् ,
द्वाभ्यां च षष्ठस्वरसंयुताभ्याम् ,
द्वाभ्यां च द्वादशसंयुताभ्याम् ॥१८२॥
द्वाभ्यां च वर्मास्त्रपदाक्षराभ्यां



अङ्गानि कृत्वा त्ववशिष्टवर्णैः ।
संव्यापदेयात्मनि संयतात्मा
कार्त्ताक्षराद्यैर्नवभिर्ध्रुवाद्यैः ॥१८३॥
षडङ्गव्यापको न्यासः प्रोक्तो विश्वार्तिहारिणी ।
विंशद्वर्णमनोर्देवि वक्ष्यतेऽथाक्षरादिकः ॥१८४॥
हृिदुदरनाभिजठर गुह्य- पादद्वयोरु जानुजङ्घासु ।
मूर्द्धनितुङ्गभ्रूश्रुतिलोचन-
नासाऽऽस्यकण्ठबाह्वोश्च ॥१८५॥
दशबीजानिप्रणवद्वय-
मध्यस्थानि विन्यसेच्छिष्टान् ।
बिन्द्वन्तिकान् ध्रुवादीनुक्तस्थानेषु
विन्यसेत् स्वतनौ ॥१८६॥
अङ्गन्यासंविधायेत्थं ततो दीपंसमाश्रयेत् ।
अङ्गन्यासंविनादीप दानंभवतिनिष्फलम् ॥१८७॥
पुर्वोक्तंच नवार्णंतु जप्त्वातदनु कारयेत् ।
यन्त्रराजात्पूर्वभागे कलशंस्थापयेत्सुधीः ॥१८८॥
लिखेत् दशदलं पद्मं-कर्णिकाके सरोज्वलम् ।
वृत्तंबहिर्भुपुराढ्यं वज्राष्टकविभुषितम् ॥१८९॥
मूलबीजं कर्णिकायां साध्याख्यकर्णसंयुतम् ।
लिखेत् समारबीजं च सहतारगतंप्रिये ॥१९०॥
सवाग्भवं च पूर्वादिपत्रेषु विलिखेत्ततः ।

सर्वमान्तानिबीजानि शिष्टार्णानन्तरालके ॥१९१॥
केशरेषु स्वरानूष्मवर्णयुक्तान् समर्पयेत् ।
वृत्तंवावेष्टयेद्वर्णैः कादिभिश्चोष्मवर्जितै ॥१९२॥
भूमिकोणंचतुष्केतु भूतवर्णान्समर्पयेत् ।
अस्यभूपुरकोणेऽस्मिन् पत्रे पद्मगते शुभे ॥१९३॥
संस्थाप्य विधिवत् प्राज्ञः कलशंसम्यगर्चयेत् ।
इन्द्रादीन्दशदिक्पालान्-सायुधान्पूजयेच्छिवे ॥९४
इन्द्रोऽग्निर्धर्मराजश्च निऋृतिर्वरुणस्तथा ।
वायुःसोमस्तथेशानो ब्रह्मानन्तइतिश्रुताः ॥१९५॥
दिक्पालांश्चयजेत्पूर्व मायुधानिततःपरम् ।
वज्रंशक्तिस्तथादण्डः-खड्गःपाशोऽङ्कुशस्तथा १९६
गदाशूलंचपद्मंचचक्रं चेति यथाक्रमम् ।
अष्टमुर्तीर्यजेत्तस्य खड्गचर्मधराःप्रिये ॥१९७॥
चौरमार्यरिसुराऽर्यापदाद्या ,
दिक्षु तन्मदविभञ्जनकाद्याः ।
दुष्टदुःखदुरितायमयनाशा,
द्याह्वयाअभियजेच्चविदिक्षु ॥१९८॥
माहिष्मतीपतेर्देवि पूजयास्तस्याऽष्टशक्तयः ।
क्षेमङ्करीवश्यकरी श्रीकरी च यशस्करी ॥१९९॥
आयुःकरीतथाप्रज्ञा करीविद्याकरी तथा ।
धनङ्करीचपूर्वादि-दिक्षु पूज्याः प्रभासिताः ॥२००॥



एवंसम्पुज्यकुम्भंतु विष्णुमार्गेण भक्तिमान् ।
श्रीफलंचततोधृत्वा मनुमेनं वदेच्छिवे ॥२०१॥
कार्त्तवीर्यसुराधीश भक्तानामभयङ्कर ।
ममाऽभीष्टायसततं कुम्भमेनंसमाश्रय ॥२०२॥
महापूजाततः कार्या कुम्भेराजसमाश्रिते ।
आवाहनादिकांपूजां कुर्यान्निशिदिनेदिने ॥२०३॥
विसर्जनंतुनोकार्यं कार्यंवैयमदैवते ।
ऋक्षेमासमभिव्याप्य कुम्भेपूज्योमहायशाः ।२०४।
कुम्भनाशेशरीरस्य नाशोभवतिनिश्चयः ।
अथध्यानंशुभंवच्मि कार्त्तवीर्यस्यभूपते ॥१०५॥
अव्यात्सर्वभयात्प्रभाकरनिभःप्रद्योतनद्योतनः ,
स्वर्णस्रक्परिवितकन्धरधरो रक्तां शुकुष्णिषवान् ।
नानाकल्पविभुषितःकरसह स्राधीत्तवाणासनो ,
वाणात्तार्धसहस्रबाहुरनिसंः भूवल्लभोनप्रभुः ॥२०६॥
सप्तद्विपैकनाथःसवितृसमरुचिःसर्वदुष्टान्तकोनः ,
पायादव्जायताक्षोरथवनिलयःस्थुलकायोऽतिभीम ।
तापात्तेषुस्त्रिलोकीं करधृतधनुषोनिःस्वनैस्त्रासयानः ,
सश्रीमान्कार्त्तवीर्योनिखिलनृपनताघ्र्यम्बुजःक्षिप्रकरी ।
एवंध्यानंसमासाद्य-प्रणमेच्चपुनः पुनः ,
कृतार्थःस्यान्नरोनून मेवंदीपविधौ कृते ॥२०८॥
इतिदत्वाविधानेन गुरवेदक्षिणां दिशेत् ।

दक्षिणाऽत्र प्रदेया वै गोदानंशङ्कमेव च ॥२०९॥
गोदानेच सहस्रस्य सूवर्णंमूल्यमेव च ।
पञ्चशतं तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ॥२१०॥
अशक्तस्याऽपि चोक्तेयं पञ्चसौवर्णमेव च ।
यथाकथंञ्चित्देवेशि दीपोदेयोविजानता ॥२११॥
सन्तुष्टेचगुरौदेवि सन्तुष्टोगोपतिःस्वयम् ।
असन्तुष्टेगुरौदेवि कार्यसिद्धिर्नजायते ॥२१२॥
इति ते कथितोदेवि कार्त्तवीर्यस्य गोपतेः ।
दीपदानस्य साकल्याद्विधिर्देवैरनुष्ठीतः ॥२१३॥
कार्त्तवीर्यनृपतेर्गिरीशजे-
दीपदानविधिलक्षणंत्विदम् ।
सद्रहस्यमखिलेष्टसिद्धिदं-
गोपनियमभिलाषुकैःश्रियः ॥२१४॥

श्रीगणेशायनमः

कार्त्तवीर्य खलद्वेषी कृतवीर्य सुतोवलि ।
सहस्र बाहु सत्रुघ्नो रक्तवासा धनुर्धरः ॥१॥
रक्तगन्धो रक्तमाल्यो राजास्मर्तु रभीष्टदः ।
द्वादशै तानी नामानी कृत वीर्यस्य यः पठेत् ॥२॥
संपद स्तस्य जायन्ते जनास्तस्य वशंगताः ।
आन बत्याशु दुरस्थं क्षेमलाभ युतंप्रियम् ॥३॥
कृत वीर्यार्जुनो नाम राजावाहु सहस्रभृत् ।



तस्य स्मरण मात्रेण ह्रितंनष्टंच लभ्यते ॥४॥
कृतवीर्य महावाहो सर्वदुष्टा निवर्हण ।
सर्वरक्ष सदातिष्ठ दुष्टा न्नाशय पाहिमाम् ॥५॥
सहस्र बाहु सशरं सचापं ,
रक्ताम्वर रक्त किरिट कुण्डलम् ॥
चौरादि दुष्टभय नाशन मीष्ट दंतं ,
ध्याये न्महाबल विजृम्भित कार्त्त वीर्यम् ॥६॥
यस्य संस्मरणा देव सर्वदुःख क्षेयोभवेत् ।
तंनमामी महाविर्यम् मर्जुनं कृत वीर्यजम् ।७।
हैहया धिपतेः स्तोत्रं सहस्रा वर्तना कृतः ।
वाञ्छितार्थं प्रदंनृणां शूद्राद्यै यदि न श्रुतम् ॥८॥

इतिश्री डामरेश्वरतन्त्रे उमामहेश्वर संवादे कार्त्तविर्यस्तोत्रम्

अपराधसहस्त्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि ॥१॥
आवाहनं न जनामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षम्यतां परमेश्वरि ॥२॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरी ।
यत्पूजितं मया देवि परिपुर्णं तदस्तु मे ॥३॥
अपराधशतं कृत्वा जगदम्बेति चोच्चरेत् ।
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ॥४॥
सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदम्बिके ।

इदानीमनुकम्प्योऽहं यथेच्छसि तथा कुरु ॥५॥
अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्युनमधिकं कृतम् ।
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरी ॥६॥
कामेश्वरी जगन्माताः सच्चिदानन्दविग्रहे ।
गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरी ॥७॥
गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात्सुरेश्वरि ॥८॥

श्रीदुर्गार्पणमस्तु ॥

सिद्ध अथ मृतसंजीवनीकवचम्

श्रीगणेशायनमः ॥

एवमाराध्य गौरिशं देवं मृत्युञ्जयेश्वरम् ।
मृतसञ्जीवनं नाम कवचं प्रजपेत् सदा ॥१॥
सारात् सारतरं पुण्यं गुह्याद् गुह्यतरं शुभम् ।
महादेवस्य कवचं मृतसंजीवनाभिधम् ॥२॥
समाहितमना भूत्वा श्रृणुष्व कवचं शुभम् ।
श्रुत्वैतद् दिव्यकवचं रहस्यं कुरु सर्वदा ॥३॥
जराभयकरो यज्वा सर्वदेवनिषेवितः ।
मृत्युञ्जयो महादेवः प्राच्यां मां पातु सर्वदा ॥४॥
दधानः शक्तिमभयां त्रिमुखः षड्भुजः प्रभुः ।
सदाशिवोऽग्निरूपी मामाग्नेय्यां पातु सर्वदा ॥५॥
अष्टादशभुजोपेतो दण्डाभयकरो विभुः ।



यमरूपी महादेवो दक्षिणस्यां सदाऽवतु ॥६॥
खड्गाभयकरो धीरो रक्षोगणनिषेवितः ।
रक्षोरूपी महेशो मां नैऋत्यां सर्वदाऽवतु ॥७॥
पाशाभयभुजः सर्वरत्नाकरनिषेवितः ।
वरुणात्मा महादेवः पश्चिमे मां सदाऽवतु ॥८॥
गदाभयकरः प्राणनायकः सर्वदागतिः ।
वायव्यां मारूतात्मा मां शंकर पातु सर्वदा ॥९॥
शङ्खाभयकरस्थो मां नायकः परमेश्वरः ।
सर्वात्मान्तरदिग्भागे पातु मां शंकरः प्रभु ॥१०॥
शूलाभयकरः सर्वविद्यानामधिनायकः ।
ईशानात्मा तथैशान्यां पातु मां परमेश्वरः ॥११
उर्ध्वभागे ब्रह्मरूपी विश्वात्माऽधः सदाऽवतु ।
शिरो मे शंकरः पातु ललाटं चन्द्रशेखरः ॥१२॥
भ्रूमध्यं सर्वलोकेशस्त्रिनेत्रोऽवतु लोचने ।
भ्रूयुग्मं गिरिशः पातु कर्णौ पातु महेश्वरः ॥१३॥
नासिकां मे महादेव ओष्ठौपातु वृषध्वजः ।
जिह्वां मे दक्षिणामूर्तिर्दन्तान्न् मे गिरिशोऽवतु ॥१४॥
मृत्युञ्जयो मुखं पातु कण्ठं मे नागभूषणः ।
पिनाकी मत्करौ पातु त्रिशुली ह्रिदयं मम ॥१५॥
पञ्चवक्रः स्तनौ पातु उदरं जगदीश्वरः ।
नाभिं पातु विरूपाक्षः पार्श्वो मे पार्वतीपतिः ॥१६।

कटिद्वयं गिरीशो मे पृष्ठं मे प्रमथाधिपः ।
गुह्यं महेश्वरः पातु ममोरू पातु भैरवः ॥१७॥
जानुनी मे जगद्धर्ता जंघे मे जगदम्बिका ।
पादौ मे सततं पातु लोकवन्द्यः सदाशिवः ॥१८॥
गिरीशः पातु मे भार्यां भवः पातु सुतान् मम ।
मृत्युञ्जयो ममायुष्यं चित्तं मे गणनायकः ॥१९॥
सर्वाङ्गं मे सदा पातु कालकालः सदाशिवः ।
एतत्ते कवचं पुण्यं देवतानां च दुर्लभम् ॥२०॥
मृतसञ्जीवनं नाम्ना महादेवेन कीर्तितम् ।
सहस्रावर्तनं चास्य पुरश्चरणमीरितम् ॥२१॥
यः पठेच्छृणुयानित्यं श्रावयेत् सुसमाहितः ॥
सोऽकालमृत्युं निर्जित्य सदायुस्यं समश्नुते ॥२२॥
हस्तेन वा यदा स्पृष्ट्वा मृतं सञ्जीवयत्यसौ ।
आधयो ब्यधयस्तस्य न भवन्ति कदाचन ॥२३॥
कालमृत्युमपि प्राप्तमसौ जयति सर्वदा ।
अणिमादिगुणैस्वर्य लभते मानवोत्तमः ॥२४॥
युद्धारम्भे पठित्वेदमष्टाविंशतिवारकम् ।
युद्धमध्ये स्थितः शत्रुः सद्यः सर्वैर्न दृश्यते ॥२५॥
न ब्रह्मादीनी चास्त्राणी क्षयं कुर्वन्ति तस्य वै ।
विजयं लभते देवयुद्धमध्येऽपि सर्वदा ॥२६॥
प्रातरूत्थाय सततं यः पठेत् कवचं शुभम् ।



अक्षयं लभते सौख्यमिह लोके परत्र च ॥२७॥
सर्वव्याधिविनिर्मुक्तः सर्वरोगविवर्जितः ।
अजरामरणो भूत्वा सदा षोडशवार्षिकः ॥२८॥
विचरत्यखिलाँल्लोकान् प्राप्य भोगांश्च दुर्लभान् ।
तस्मादिदं महागोप्यं कवचं समुदाहृितम् ॥२९॥
मृतसञ्जीवनं नाम्ना दैवतैरपि दुर्लभम् ॥३०॥
इतिमहर्षिवसिष्ठविरचितं मृतसञ्जीवन कवचं सम्पूर्णम्
यत्कृतं तत्सुकृतमस्तु यन्नकृतं तद्विष्णोः प्रसादाद्
ब्राह्मणवचनात् सर्वं परिपुर्णमस्तु । शिवार्पण मस्तु
ॐ अस्तु परिपुर्णम् इतिप्रति वचनम्
ॐ प्रमादात् कुर्वतां कर्म, प्रच्यवेताध्वरेषु च ।
स्मरणादेव चद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥१॥
आयुः प्रजां धनं विद्यां स्वर्ग मोक्ष सुखानि च ।
प्रयच्छन्ति तथा राज्यं पितरः श्राद्धतर्पिताः ॥२॥
ॐ यस्या स्मृत्या च नामोक्त्या तपोः यज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।
ॐ अच्युताय नमः ३ ।
चतुर्भिश्च चतुर्भिश्च द्वभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥३॥
लेखक कृष्णप्रशाद सूर्यविनायक काठमाण्डु (नेपाल् )
( हिमवत्खण्ड )